शुद्धात्मोपलम्भस्य सदा प्रवर्तमानत्वात् ॥ १३ ॥ संवरो द्वेधा ॥ १४ ॥ भावद्रव्याभ्यां जीवजीवाभ्यां वा ॥ १५ ॥ तद्द्वयं संवार्यसंवारकोभयम् ॥१६॥ संवार्यो विभावानास्रवः ॥ १७ ॥ द्रव्यानास्रवश्च ॥ १८ ॥ संवारकः शुद्धपरिणामः ॥ १९ ॥ विभावनिमित्तत्वाभावश्च ॥ २० ॥ संवारकसंवार्यत्वे जीवाजीवौ मुख्यौ ॥ २१ ॥ आदेयमिदम् तत्त्वमानिर्विकल्पात् ॥ २२ ॥

इति अध्यात्मयोगिक्षुल्लकवर्णिश्रीमत्सहजानन्दविरचिते स्वतत्त्वाधिगमे अध्यात्मसूत्रे भावद्रव्यसंवरप्ररूपकः पंचमोऽध्यायः।

---

## अथ षष्ठोऽध्यायः

विकृतिनिर्जरणं निर्जरा ॥ १ ॥ सैव मोक्षोपायः ॥ २ ॥ द्वेधा ॥ ३ ॥ भावद्रव्ययोः ॥ ४ ॥ वीतरागनिर्विकल्पसमाधिर्भावनिर्जरा ॥ ५ ॥ बन्धानिमित्तं निष्फलं कर्मनिर्जरणं द्रव्यनिर्जरा ॥ ६ ॥ ते च परमार्थैकत्वद्रष्टुरेव ॥ ७ ॥ स चान्तर्बहिर्निःशङ्कितः ॥ ८ ॥ अनाकांक्षः ॥ ९ ॥ निर्विचिकित्सः ॥ १० ॥ अमूढः ॥ ११ ॥ उपगूहकः ॥ १२ ॥ शिवस्थापकः ॥ १३ ॥ धर्मवत्सलः ॥ १४ ॥ प्रभावकश्च ॥ १५ ॥ परस्थितिनिर्जरार्थम् स्वभावविभावौ विभेद्य स्वभाव उपलम्भनीयः ॥ १६ ॥ निरुपधिरुपादानकारणीभूत एकीकृतशुद्धपर्यायः स्वभावः ॥ १५ ॥ आत्मनोऽपावनागन-

न्ताहेतुकासाधारणज्ञानस्वभावः ॥ १८ ॥ तत्स्थैर्याय सकलरागविकल्पास्त्याज्याः ॥ १९ ॥ तस्याभाय स्वभावो दृश्यः ॥२०॥ तमभिप्रेत्य बाह्यसंयोगं निवर्तयेत् ॥ २१ ॥ स्वभावमाश्रित्य स्वमिदं तयाऽनुभवेत् ॥२२॥ शुद्धचिद्रूपोऽहम् ॥ २३ ॥

इति अध्यात्मयोगिन्यायतीर्थक्षुल्लकवर्णि श्रीमत्सहजानन्दविरचिते, स्वतत्त्वाधिगम अध्यात्मसूत्रे भावद्रव्यनिर्जराप्ररूपकः षष्ठोऽध्यायः।

---

## अथ सप्तमोऽध्यायः

पूर्णशुद्धस्वरूपमवस्थानं मोक्षः ॥ १ ॥ तत्सम्यग्दर्शनज्ञानचारित्रैकत्वम् ॥ २ ॥ विशुद्धज्ञानदर्शनस्वरूपनिजशुद्धात्मानुभूतिः सम्यग्दर्शनम् ॥ ३ ॥ अखण्डस्वरूपप्रतीत्या सह वस्तुज्ञप्तिः सम्यग्ज्ञानम् ॥ ४ ॥ विकृतिपरिहरणस्वभावेन ज्ञप्तिस्थितिः सम्यक्चारित्रम् ॥ ५ ॥ त्रयाणामेकत्वं ज्ञातृत्वमात्रम् ॥ ६ ॥ उपधिमोचनं वा मोक्षः ॥ ७ ॥ स बन्धच्छेदात् ॥ ८ ॥ स बन्धभावारागात् ॥९॥ स बन्धात्मनोः स्वभावभेदपरिज्ञानात् ॥ १० ॥ मोक्षो द्वेधा ॥ ११ ॥ द्रव्यभावाभ्याम् ॥ १२ ॥ तावपि द्वेधा मोच्य मोचकभेदात् ॥ १३ ॥ भूतार्थेन स्वैकत्मेव ॥ १४ ॥ तद्ध्येयं फलञ्च ॥ १५ ॥ शान्तस्वरूपम् ॥ १६ ॥ शुद्ध-

परिस्खलितो धर्मो वा ॥ १७ ॥ स्वस्ति । १८ ।

इति अध्यात्मयोगिक्षुल्लकवर्णिश्रीमत्सहजानन्दविरचिते स्वतत्त्वाधिगमे अध्यात्मसूत्रे भावद्रव्यमोक्ष प्ररूपकः सप्तमोऽध्यायः ।

---

## अथाष्टमोऽध्यायः

पर्यायतो नानात्मगुणस्थानानि ॥ १ ॥ श्रद्धाचारित्रयोगैः ॥ २ ॥ विपरीताभिनिवेशो मिथ्यात्वम् ॥ ३ ॥ तदनादिबद्धस्यानादि ॥ ४ ॥ सम्यक्त्वच्युतस्य सादि ॥ ५ ॥ सम्यक्त्वासादने सासादनसम्यक्त्वम् ॥ ६ ॥ मिश्राभिनिवेशो मिश्रः ॥७॥ अविरतसम्यक्त्वम् ॥ ८ ॥ अंशतो विरतौ देशविरतिः ॥ ९ ॥ सर्वतः प्रमादे च प्रमत्तविरतः ॥ १० ॥ प्रमादाभावेऽप्रमत्तविरतः ॥ ११ ॥ स द्वेधा ॥ १२ ॥ स्वस्थानसातिशयभेदात् ॥ १३ ॥ प्रमत्ताप्रमत्तपरिवृत्तौ स्वस्थानी ॥ १४ ॥ सातिशयोऽधःकरणस्थः ॥ १५ ॥ ततोऽपूर्वकरणश्चारित्रमोहस्योपशमकः क्षपको वा ॥१६॥ अनिवृत्तिकरणश्च ॥ १७ ॥ अवशिष्टसूक्ष्मसाम्परायजेता च ॥ १८ ॥ उपशान्तमोहः ॥ १९ ॥ क्षीणमोहः ।२०। योगेन युतः सर्वज्ञः संयोगः केवली । २१ । रहितोऽयोगः ॥२२॥ ततः सिद्धो गुणस्थानातीतः ॥२३॥ गुणस्थानानीमानि क्रमाक्रमोभयरूपेण यथागमं योज्यानि ॥२४॥ सिद्धः सर्वतः पूर्णशुद्धः ॥२५॥ ॐ नमः सिद्धाय ॥२६॥

इति अध्यात्मयोगिन्यायतीर्थ क्षुल्लकवर्णि श्रीमत्सहजानन्दविरचिते अध्यात्मसूत्रे गुणस्थान संकेतकोऽष्टमोऽध्यायः ।

# अथ नवमोऽध्यायः

सर्वार्थेषु सारः समयः ॥ १ ॥ सोऽनन्तशक्तिकः ॥ २ ॥ तत्र ज्ञानं मुख्यम् ॥ ३ ॥ सर्वचेतकत्वात् ॥ ४ ॥ तस्य पर्यायो द्वेधा ॥ ५ ॥ सम्यग्मिथ्याभेदात् ॥ ६ ॥ मिथ्याज्ञानमुपचारात् ॥ ७ ॥ सम्यग्ज्ञानं सम्यक्त्वसहचारात् ॥ ८ ॥ ज्ञानानि मतिश्रुतावधिमनःपर्ययकेवलानि ॥ ९ ॥ तत्र चत्वारि विकलज्ञानानि ॥ १० ॥ सकलज्ञानं केवलम् ॥ ११ ॥ तन्निरन्तरं क्षणवर्ति ज्ञानस्वभावोपादानम् ॥ १२ ॥ अन्त्ये सम्यगेव ॥ १३ ॥ सर्वपर्यायेष्वेकरूपमखण्डं ज्ञानमात्रं विशुद्धम् ॥ १४ ॥ तदनादि ॥ १५ ॥ अनन्तम् ॥ १६ ॥ अहेतुकम् ॥ १७ ॥ परपरिणत्या परिणतिशून्यम ॥ १८ ॥ स्वपरिणामेन परिणन्तृ ॥ १९ ॥ सर्वशक्तिगर्भम् ॥ २० ॥ विशेषतोऽभेदषट्कारकविषयं ॥ २१ ॥ सामान्यतः स्वलक्षणमात्रम् ॥ २२ ॥ कर्तृभोक्त्रादिभावरहितम् ॥ २३ ॥ विकृतिमुक्त्यकल्पितम् ॥ २४ ॥ ज्ञानमयत्वादात्मैव तथा ॥ २५ ॥ तच्छ्रद्धानं सम्यग्दर्शनम् ॥ २६ ॥ तदनुभूतिः सम्यग्ज्ञानम् ॥ २७ ॥ तत्स्थैर्यं सम्यक्चारित्रम् ॥ २८ ॥ शुद्धं शुद्धं तत्स्फूर्जतु ॥ २९ ॥

इति अध्यात्मयोगिन्यायतीर्थक्षुल्लकवर्णिश्रीमत्सहजानन्दविरचिते स्वतत्त्वाधिगमे अध्यात्मसूत्रे विशुद्धज्ञानप्ररूपकः नवमोऽध्यायः ।

---

# अथ दशमोऽध्यायः

ज्ञानवृत्तिः संयमः ॥ १ ॥ विशुद्धद्रष्टुःशुभरागप्रवृत्तिरप्युपचारात् ॥ २ ॥ संयमः पञ्चधा ॥ ३ ॥ सामायिकच्छेदोपस्थापनापरिहारविशुद्धिसूक्ष्मसाम्पराययथाख्यातसंयमभेदात् ॥ ४ ॥ बाह्याभ्यन्तरपरिग्रहविरतसाम्यभावः सामायिकः ॥ ५ ॥ हिंसादिविरतश्छेदोपस्थापकः ॥ ६ ॥ स च भेदसंयमः ॥ ७ ॥ बुद्धिपूर्वकोऽयमेव ॥ ८ ॥ समितिगुप्तिधर्मानुप्रेक्षापरीषहजया भेदसंयमेऽन्तर्गता अभेदस्पर्शिनः ॥ ९ ॥ सर्व एते जोषितव्या आनिर्विकल्पसंयमात् ॥ १० ॥ ऋद्धिविशेषजातः प्राणिपीडापरिहारप्रवणः परिहारविशुद्धिः ॥ ११ ॥ अवशिष्टसूक्ष्मलोभपरिहाणिकुशला विशुद्धिः सूक्ष्मसाम्परायः ॥ १२ ॥ यथाख्यातो निरुपधिस्वभावख्यातिः ॥ १३ ॥ तदर्थं संयमः सेव्यः ॥ १४ ॥ ततः संवरनिर्जरे ॥ १५ ॥ ततः सर्वंपरभावविमुक्तो मोक्षः ॥ १६ ॥ स सहजज्ञानानन्दस्वरूपः स्वत एव ॥ १७ ॥

इति अध्यात्मयोगिन्यायतीर्थक्षुल्लकवर्णिश्रीमत्सहजानंदविरचिते स्वतत्त्वाधिगमे अध्यात्मसूत्रे संयमप्ररूपकः दशमोऽध्यायः ।

— :o: —

॥ ॐ तत्सत्परमात्मने नमः ॥

पूज्य श्री क्षुल्लक मनोहरवर्णिसहजानन्दस्वामिविरचितम्

# १० तत्त्वसूत्रम्

( अष्टाध्यायी )

## प्रथमोऽध्यायः

ॐ । १ । तत् । २ । सत् । ३ । एकम् । ४ । नित्यम् । ५ । सप्रतिपक्षम् । ६ । अप्रतिपक्षम् । ७ । अतत् । ८ । असत् । ९ । अनेकम् । १० । क्षणिकम् । ११ । अविभक्तम् । १२ । विभक्तम् । १३ । अखण्डम् । १४ । सांशम् । १५ । स्वपरिणतम् । १६ । अस्वापरिणतम् । १७ । स्वभाववत् । १८ । असत्सामान्यम् । १९ । ज्ञानमात्रम् । २० ।

## अथ द्वितीयोऽध्यायः

तदहम् १ । चित् । २ । ब्रह्म । ३ । जीवः । ४ । आत्मा । ५ । ज्ञाता । ६ । द्रष्टा । ७ । अमूर्तः । ८ । कर्ता । ९ । भोक्ता । १० । अकर्ता । ११ । अभोक्ता । १२ । विभुः । १३ । अव्यापी । १४ । स्रष्टा । १५ । अस्रष्टा । १६ । शुद्धः । १७ । अशुद्धः । १८ । शक्तिमयम् । १९ । ज्ञान-मात्रम् । २० ।

## अथ तृतीयोध्यायः

अहम् । १ । आनन्दः । २ । निर्विकल्पः । ३ । निष्कर्मा । ४ । निष्कलः । ५ । निर्विश्वः । ६ । दिव्यः । ७ । मद्-

क्षान्तिर्देवी । ८ । दुर्गा । ९ । शक्तिः । १० । चण्डी । ११ । मुण्डी । १२ । चन्द्रघण्टा । १३ । भद्रकाली । १४ । अम्बा । १५ । सरस्वती । १६ । भगवती । १७ । तत्प्रसादाभिराकुलः । १८ । शिवमयम् । १९ । ज्ञानमात्रम् । २० ।

## अथ चतुर्थोऽध्यायः

प्रभुः । १ । सर्वज्ञः । २ । सर्वदर्शी । ३ । स्वच्छः । ४ । स्वविलासः । ५ । अकार्यः । ६ । अकारणः । ७ । परिणामी ८ । अन्यूनः । ९ । अनतिरिक्तः । १० । अपरिणामी ।११। निष्क्रियः । १२ । नियतः । १३ । अनन्तधर्मा । १४ । विरुद्धधर्मा । १५ । उपायः । १६ । उपेयः । १७ । योगिगम्यम् । १८ । स्वानुभाव्यम् । १९ । ज्ञानमात्रम् । २० ।

## अथ पञ्चमोऽध्यायः

सिद्धः । १ । जिनः । २ । हरिः । ३ । हरः । ४ । ईश्वरः । ५ । परमात्मा । ६ । भगवान् । ७ । शिवः । ८ । ब्रह्मा । ९ । विष्णुः । १० । बुद्धः । ११ । रामः । १२ । ईशः । १३ । सनातनः । १४ । परमेष्ठी । १५ । शम्भुः । १६ । मुक्तः । १७ । अर्हन् । १८ । स्वयंभूः । १९ । ज्ञानमात्रम् ।२०।

## अथ षष्ठोऽध्यायः

अस्वादपेत्य । १ । जडात् । २ । बन्धोः । ३ । देहात् । ४ । शब्दात् । ५ । रूपात् । ६ । गन्धात् । ७ । रसात् ।८। स्पर्शात् । ९ । क्रोधात् । १० । मानात् । ११ । छलात्

। १२ । लोभात् । १३ । तर्कात् । १४ । भक्तेः । १५ । ध्यानात् । १६ । ज्ञेयमात्रात् । १७ । ज्ञानव्यक्तेः । १८ । ज्ञेयाकारात् । १६ । ज्ञानमात्रम् । २० ।

## अथ सप्तमोऽध्यायः

तं लभे । १ । ज्ञातम् । २ । स्वजातम् । ३ । प्रतिभातम् । ४ । भूतार्थम् । ५ । सत्यार्थम् । ६ । परमार्थम् । ७ । स्वार्थम् । ८ । अबद्धम् । ९ । अस्पृष्टम् । १० । अनन्यम् । ११ । नियतम् । १२ । अविशेषम् । १३ । असंयुक्तम् । १४ । अजम् । १५ । अनन्तम् । १६ । गुप्तम् । १७ । स्वयम् । १८ । सहजम् । १६ । ज्ञानमात्रम् । २० ।

## अथ अष्टमोऽध्यायः

तच्छृणवानि । १ । अवगृह्णानि । २ । धारयानि । ३ । ब्रुवाणि । ४ । गच्छानि । ५ । जानीयाम् । ६ । मन्ये । ७ । इच्छामि । ८ । रोचे । ६ । प्रत्येमि । १० । श्रद्धानि । ११ । भावयेयम् । १२ । ध्यायेयम् । १३ । स्पृशानि । १४ । प्राप्नुवाणि । १५ । प्रतपानि । १६ । अनुभवानि । १७ । संचेतानि । १८ । एकीभवेयम् । १६ । ज्ञानमात्रम् । २० ।

॥ इति तत्त्वसूत्रनाम्नी अष्टाध्यायी समाप्ता ॥

---

श्रीमद्देवसेनविरचिता

# ११ आलापपद्धतिः ।

गुणानां विस्तरं वक्ष्ये स्वभावानां तथैव च ।
पर्यायाणां विशेषेण नत्वा वीरं जिनेश्वरम् ॥

आलापपद्धतिर्वचनरचनाऽनुक्रमेण नयचक्रस्योपरि उच्यते। सा च किमर्थम्? द्रव्यलक्षणसिद्ध्यर्थम् स्वभावसिद्ध्यर्थञ्च। द्रव्याणि कानि? जीवपुद्गलधर्माधर्माकाशकालद्रव्याणि। सद्द्रव्यलक्षणम्, उत्पादव्ययध्रौव्ययुक्तं सत्। इति द्रव्याधिकारः।

लक्षणानि कानि? अस्तित्वं, वस्तुत्वं, द्रव्यत्वं, प्रमेयत्वं, अगुरुलघुत्वं, प्रदेशत्वं, चेतनत्वमचेतनत्व मूर्तत्वममूर्तत्वं द्रव्याणां दश सामान्यगुणाः प्रत्येकमष्टावष्टौ सर्वेषाम्।

[एकैकद्रव्ये अष्टौ अष्टौ गुणाः भवन्ति। जीवद्रव्ये अचेतनत्वं मूर्त्तत्वं च नास्ति, पुद्गलद्रव्ये चेतनत्वममूर्तत्वंच नास्ति, धर्माधर्माकाशकालद्रव्येषु चेतनत्वं मूर्तत्वं च नास्ति। एवं द्विद्विगुणवर्जिते अष्टौ अष्टौ गुणाः प्रत्येकद्रव्ये भवन्ति।]

ज्ञानदर्शनसुखवीर्याणि स्पर्शरसगन्धवर्णाः गतिहेतुत्वं स्थितिहेतुत्वमवगाहनहेतुत्वं वर्त्तनाहेतुत्वं चेतनत्वमचेतनत्वं मूर्तत्वममूर्तत्वं द्रव्याणां षोडश विशेषगुणाः। षोडशविशेषगुणेषु जीवपुद्गलयोः षडिति। जीवस्य ज्ञानदर्शनसुखवीर्याणि चेतनत्वममूर्तत्वमिति षट्। पुद्गलस्य स्पर्शरसगन्धवर्णाः मूर्त्तत्वमचेतनत्वमिति षट्। इतरेषां धर्माधर्माकाशकालानां

प्रत्येकं त्रयो गुणाः । धर्मद्रव्ये गतिहेतुत्वममूर्तत्वमचेतनत्वमेते त्रयो गुणाः । अधर्मद्रव्ये स्थितिहेतुत्वममूर्तत्वमचेतनत्वमिति । आकाशद्रव्ये अवगाहनहेतुत्वममूर्तत्वमचेतनत्वमिति । कालद्रव्ये वर्तनाहेतुत्वममूर्तत्वमचेतनत्वमिति विशेषगुणाः । अन्तस्थाश्चत्वारो गुणाः स्वजात्यपेक्षया सामान्यगुणा विजात्यपेक्षया त एव विशेषगुणाः । इति गुणाधिकारः ।

गुणविकाराः पर्यायास्ते द्वेधा स्वभावविभावपर्यायभेदात् अगुरुलघुविकाराः स्वभावपर्यायास्ते द्वादशधा षड्वृद्धिरूपाः षड्ढानिरूपाः । अनन्तभागवृद्धिः, असंख्यातभागवृद्धिः, संख्यातभागवृद्धिः, संख्यातगुणवृद्धिः, असंख्यातगुणवृद्धिः, अनन्तगुणवृद्धिः, एवं षड्वृद्धिरूपास्तथा अनन्तभागहानिः, असंख्यातभागहानिः, संख्यातभागहानिः, संख्यातगुणहानिः, असंख्यातगुणहानिः, अनन्तगुणहानिः एवं षड्ढानिरूपा ज्ञेयाः । विभावद्रव्यव्यञ्जनपर्यायश्चतुर्विधा नरनारकादिपर्यायाः अथवा चतुरशीतिलक्षा योनयः । विभावगुणव्यञ्जनपर्याया मत्यादयः स्वभावद्रव्यव्यञ्जनपर्यायाश्चरमशरीरात्किञ्चिन्न्यूनसिद्धपर्यायाः । स्वभावगुणव्यञ्जनपर्याया अनन्तचतुष्टयस्वरूपा जीवस्य । पुद्गलस्य तु द्व्यणुकादयो विभावद्रव्यव्यञ्जनपर्यायाः । रसरसान्तरगन्धगन्धान्तरादिविभावगुणव्यञ्जनपर्यायाः । अविभागिपुद्गलपरमाणुः स्वभावद्रव्यव्यञ्जनपर्यायः । वर्णगन्धरसैकैकाविरुद्धस्पर्शद्वयं स्वभावगुणव्यञ्जनपर्यायः ।

अनाद्यनिधने द्रव्ये स्वपर्यायाः प्रतिक्षणम् ।
उन्मज्जन्ति निमज्जन्ति जलकल्लोलवज्जले ॥ १ ॥
धर्माधर्मनभः काला अर्थपर्यायगोचराः ।
व्यञ्जनेन तु संबद्धौ द्वावन्यौ जीवपुद्गलौ ॥ २ ॥
इति पर्यायाधिकारः गुणपर्ययवद्द्रव्यम् ।

स्वभावाः कथ्यन्ते । अस्तिस्वभावः, नास्तिस्वभावः, नित्यस्वभावः, अनित्यस्वभावः, एकस्वभावः, अनेकस्वभावः, भेदस्वभावः, अभेदस्वभावः, भव्यस्वभावः, अभव्यस्वभावः, परमस्वभावः,द्रव्याणामेकादश सामान्यस्वभावाः । चेतनस्वभावः, अचेतनस्वभावः, मूर्त्तस्वभावः, अमूर्त्तस्वभावः, एकप्रदेशस्वभावः, अनेकप्रदेशस्वभावः,विभावस्वभावः, शुद्धस्वभावः, अशुद्धस्वभावः, उपचरितस्वभावः, एते द्रव्याणां दश विशेषस्वभावाः । जीवपुद्गलयोरेकविंशतिः चेतनस्वभावः, मूर्तस्वभावः, विभावस्वभावः, एकप्रदेशस्वभावः, अशुद्धस्वभाव एतैःपञ्चभिःस्वभावैर्विना धर्मादित्रयाणां षोडश स्वभावाः सन्ति । तत्र बहुप्रदेशं विना कालस्य पञ्चदश स्वभावाः ।

एकविंशतिभावाः स्युर्जीवपुद्गलयोर्मताः ।
धर्मादीनां षोडश स्युः काले पञ्चदश स्मृताः ॥३॥

ते कुतो ज्ञेयाः ? प्रमाणनयविवक्षातः । सम्यग्ज्ञानं प्रमाणम् । तद्द्वेधा प्रत्यक्षेतरभेदात् अवधिमनःपर्ययावेकदेशप्रत्यक्षौ । केवलं सकलप्रत्यक्षं । मतिश्रुते परोक्षे । प्रमाणमुक्तं । तदवयवा नयाः ।

नयभेदा उच्यन्ते: —

णिच्छयववहारणया मूलमभेयाण णयाण सव्वाणं ।
णिच्छय साहणहेओ दव्वयपज्जत्थिया मुणइ ॥ ४ ॥

द्रव्यार्थिकः, पर्यायार्थिकः नैगमः, संग्रहः, व्यवहारः, ऋजुसूत्रः, शब्दः,समभिरूढः,एवंभूत इति नव नयाः स्मृताः । उपनयाश्च कथ्यन्ते । नयानां समीपा उपनयाः। सद्भूतव्यवहारः असद्भूतव्यवहारः उपचरितासद्भूतव्यवहारश्चेत्युपनयास्त्रेधा ।

इदानीमेतेषां भेदा उच्यन्ते । द्रव्यार्थिकस्य दशभेदाः ।

कर्मोपाधिनिरपेक्षः शुद्धद्रव्यार्थिको यथा संसारी जीवः सिद्धसदृक् शुद्धात्मा । उत्पादव्ययगौणत्वेन सत्ताग्राहकः शुद्धद्रव्यार्थिको यथा द्रव्यं नित्यम् । भेदकल्पनानिरपेक्षःशुद्धो-द्रव्यार्थिको यथा निजगुणपर्यायस्वभावाद्द्रव्यमभिन्नम् ।

कर्मोपाधिसापेक्षोऽशुद्धद्रव्यार्थिको यथा क्रोधादिकर्मज-भाव आत्मा । उत्पादव्ययसापेक्षोऽशुद्धद्रव्यार्थिको यथैक-स्मिन् समये द्रव्यमुत्पादव्ययध्रौव्यात्मकम् । भेदकल्पना-सापेक्षोऽशुद्धद्रव्यार्थिको यथात्मनो दर्शनज्ञानादयो गुणाः । अन्वयद्रव्यार्थिको तथा-गुणपर्यायस्वभावं द्रव्यम् । स्वद्रव्यादि-ग्राहकद्रव्यार्थिकोयथा-स्वद्रव्यादिचतुष्टयापेक्षया द्रव्यमस्ति । परद्रव्यादिग्राहकद्रव्यार्थिको यथा-परद्रव्यादिचतुष्टयापेक्षया द्रव्यं नास्ति । परमभावग्राहकद्रव्यार्थिको यथा-ज्ञानस्वरूप

आत्मा। अत्रानेकस्वभावानां मध्ये ज्ञानाख्यः परमस्वभावो गृहीतः।

इति द्रव्यार्थिकस्य दशभेदाः

---

अथ पर्यायार्थिकस्य षड्भेदा उच्यन्ते-

अनादिनित्यपर्यायार्थिको यथा पुद्गलपर्यायो नित्यो मेर्वादिः। सादिनित्यपर्यायार्थिको यथा-सिद्धपर्यायो नित्यः। सत्तागौणत्वेनोत्पादव्ययग्राहकस्वभावो नित्याशुद्धपर्यायार्थिको यथा-समयं समयं प्रति पर्याया विनाशिनः। सत्तासापेक्षस्वभावो नित्याशुद्धपर्यायार्थिको यथा—एकस्मिन् समये त्रयात्मकः पर्यायः। कर्मोपाधिनिरपेक्षस्वभावो नित्यशुद्धपर्यायार्थिको यथा—सिद्धपर्यायसदृशाः शुद्धाः संसारिणां पर्यायाः। कर्मोपाधिसापेक्षस्वभावोऽनित्याशुद्धपर्यायार्थिको यथा-संसारिणामुत्पत्तिमरणे स्तः। इति पर्यायार्थिकस्य षड् भेदाः।

नैगमस्त्रेधा भूतभाविवर्त्तमानकालभेदात्। अतीते वर्त्तमानारोपणं यत्र स भूतनैगमो यथा-अद्य दीपोत्सवदिने श्रीवर्द्धमानस्वामी मोक्षं गतः। भाविनि भूतवत्कथनं यत्र स भाविनैगमो यथा अर्हन् सिद्ध एव। कर्तुमारब्धमीषन्निष्पन्नमनिष्पन्नं वा वस्तु निष्पन्नवत्कथ्यते यत्र स वर्त्तमाननैगमो यथा-ओदनः पच्यते इति नैगमस्त्रेधा।

संग्रहो द्विविधः। सामान्यसंग्रहो यथा-सर्वाणि द्रव्याणि

परस्परमविरोधीनि । विशेषसंग्रहो यथा—सर्वे जीवाः परस्परमविरोधिनः इति संग्रहोऽपि द्विधा ।

व्यवहारोऽपि द्वेधा । सामान्यसंग्रहभेदको व्यवहारो यथा-द्रव्याणि जीवाजीवाः । विशेषसंग्रहभेदको व्यवहारो यथा-जीवाः संसारिणो मुक्ताश्च इति व्यवहारोऽपि द्वेधा

ऋजुसूत्रो द्विविधः सूक्ष्मर्जुसूत्रो यथा—एकसमयावस्थायी पर्यायः । स्थूलर्जुसूत्रो यथा-मनुष्यादिपर्यायास्तदायुःप्रमाणकालं तिष्ठन्ति इति ऋजुसूत्रोऽपि द्वेधा ।

शब्दसमभिरूढैवंभूताः नयाः प्रत्येकमेकैका नयाः । शब्दनयो यथा दारा भार्या कलत्रं जलं आपः । समभिरूढनयो यथा गौः पशुः । एवंभूतनयो यथा-इन्दतीति इन्द्रः । उक्ता अष्टाविंशतिर्नयभेदाः ।

उपनयभेदा उच्यन्ते-सद्भूतव्यवहारो द्विधा । शुद्धसद्भूतव्यवहारो यथा-शुद्धगुणशुद्धगुणिनोः शुद्धपर्यायशुद्धपर्यायिणोर्भेदकथनम् । अशुद्धसद्भूतव्यवहारो यथाऽशुद्धगुणाऽशुद्धगुणिनोरशुद्धपर्यायाऽशुद्धपर्यायिणोर्भेदकथनम् इति सद्भूतव्यवहारोऽपि द्वेधा ।

असद्भूतव्यवहारस्त्रेधा । स्वजात्यसद्भूतव्यवहारो यथा—परमाणुर्बहुप्रदेशीति कथनमित्यादि । विजात्यसद्भूतव्यवहारो यथा मूर्तं मतिज्ञानं यतो मूर्तद्रव्येण जनितम् । स्वजातिविजात्यसद्भूतव्यवहारो यथा ज्ञेये जीवेऽजीवे ज्ञानमिति कथनं ज्ञानस्य विषयात् । इत्यसद्भूतव्यवहारस्त्रेधा ।

उपचरितासदभूतव्यवहारस्त्रेधा । स्वजात्युपचरितासद्भूतव्यवहारो यथा-पुत्रदारादि मम । विजात्युपचरितासद्भूतव्यवहारो यथा वस्त्राभरणहेमरत्नादि मम । स्वजातिविजात्युपचरितासद्भूतव्यवहारो यथा–देशराज्य दुर्गादि मम इत्युपचरितासद्भूतव्यवहारस्त्रेधा ।

सहभावो गुणाः, क्रमवर्तिनः पर्यायाः । गुण्यन्ते पृथक्क्रियन्ते द्रव्यं द्रव्याद्यैस्ते गुणाः । अस्तीत्येतस्य भावोऽस्तित्वं सद्रूपत्वम् । वस्तुनो भावो वस्तुत्वम्, सामान्यविशेषात्मकं वस्तु । द्रव्यस्वभावो द्रव्यत्वम् । निजनिजप्रदेशसमूहैरखण्डवृत्या स्वभावविभावपर्यायान् द्रवति द्रोष्यति अदुद्रवदिति द्रव्यम् । सद्द्रव्यलक्षणम्, सीदति स्वकीयान् गुणपर्यान् गुणपर्यायान् व्याप्नोतीति सत् । उत्पादव्ययध्रौव्ययुक्तं सत् । प्रमेयस्य भावः प्रमेयत्वम् प्रमाणेन स्वपरस्वरूपपरिच्छेद्यं प्रमेयम् । अगुरुलघोर्भावोऽगुरुलघुत्वं । सूक्ष्मा वागगोचराः प्रतिक्षण वर्तमाना आगमप्रमाणादभ्युपगम्या अगुरुलघुगुणाः ।

"सूक्ष्मं जिनोदितं तत्त्वं हेतुभिर्नैव हन्यते ।
आज्ञासिद्ध तु तद्ग्राह्यं नान्यथावादिनो जिनाः" ॥५॥

प्रदेशस्य भावः प्रदेशत्वं क्षेत्रत्वं अविभागीपुद्गलपरमाणुनावष्टब्धम् । चेतनस्य भावश्चेतनत्वम् चैतन्यमनुभवनम् ।

चैतन्यमनुभूतिः स्यात् सा क्रियारूपमेव च ।
क्रिया मनोवचःकायेष्वन्विता वर्तते ध्रुवम् ॥६॥

अचेतनस्य भावोऽचेतनत्वमचैतन्यमननुभवनम् । मूर्तस्य

भावो मूर्तत्वं रूपादिमत्त्वम्। अमूर्तस्य भावोऽमूर्तत्वंरूपादि-रहितत्वम्। इति गुणानां व्युत्पत्तिः। स्वभावविभावरूपतया-याति पर्येति परिणमतीति पर्याय इति पर्यायस्य व्युत्पत्तिः। स्वभावलाभादच्युतत्वादस्तिस्वभावः। परस्वरूपेणाभावान्नास्ति स्वभावः। निजनिजनानापर्यायेषु तदेवेदमिति द्रव्यस्योपल-म्भान्नित्यस्वभावः। तस्याप्यनेकपर्यायपरिणामित्वादनित्यस्व-भावः। स्वभावानामेकाधारत्वादेकस्वभावः एकस्याप्यनेकस्व-भावोपलम्भादनेकस्वभावः। गुणगुण्यादिसंज्ञाभेदाद् भेदस्व-भावः। संज्ञासंख्यालक्षणप्रयोजनानि गुणगुण्याद्येकस्वभावा-दभेदस्वभावः। भाविकाले परस्वरूपाकारभवनाद् भव्यस्वभावः। कालत्रयेऽपि परस्वरूपाकाराभवनादभव्यस्वभावः। उक्तञ्च—

"अण्णोण्णं पविसंता दिंता उग्गासमण्णमण्णस्स।
मेलंतावि य णिच्चं सगसगभावं ण विजहंति" ॥७॥

पारिणामिकभावप्रधानत्वेन परमस्वभावः। इति सामा-न्यस्वभावानां व्युत्पत्तिः। प्रदेशादिगुणानां व्युत्पत्तिश्चेतनादि-विशेषस्वभावानां च व्युत्पत्तिर्निगदिता।

धर्मापेक्षया स्वभावा गुणा न भवन्ति, स्वद्रव्यचतुष्टया-पेक्षया परस्परं गुणाः स्वभावा भवन्ति। द्रव्याण्यपि भवन्ति, स्वभावादन्यथाभवनं विभावः। शुद्धं केवलभावमशुद्धं तस्यापि विपरीतम्। स्वभावस्याप्यन्यत्रोपचारादुपचरितस्वभावः। स द्वेधा—कर्मजस्वाभाविकभेदात्। यथा जीवस्य मूर्तत्वमचेतनत्वं

यथा सिद्धानां परज्ञता परदर्शकत्वं च । एवमितरेषां द्रव्याणामुपचारो यथासम्भवो ज्ञेयः ।

"दुर्नयैकान्तमारूढा भावानां स्वार्थिका हि ते ।
स्वार्थिकाश्च विपर्यस्ताः सकलङ्का नया यतः" ॥८॥

तत्कथं तथाहि–सर्वथैकान्तेन सद्रूपस्य न नियतार्थव्यवस्था–संकरादिदोषत्वात् तथा–सद्रूपस्य सकलशून्यता प्रसङ्गात्, नित्यस्यैकरूपत्वादेकरूपस्यार्थक्रियाकारित्वाभावः, अर्थक्रियाकारित्वाभावे द्रव्यस्याप्यभावः । अनित्यपक्षेऽपि अनित्यरूपत्वादर्थक्रियाकारित्वाभावः, अर्थक्रियाकारित्वाभावे द्रव्यस्याप्यभावः । एकस्वरूपस्यैकान्तेन विशेषाभावः, सर्वथैकरूपत्वात् विशेषाभावे सामान्यस्याप्यभावः ।

"निर्विशेषं हि सामान्यं भवेत्खरविषाणवत् ।
सामान्यरहितत्वाच्च विशेषस्तद्वदेव हि" ॥९॥ इति ज्ञेयः॥

अनेकपक्षेऽपि तथा द्रव्याभावो निराधारत्वात् आधाराधेयाभावाच्च । भेदपक्षेऽपि विशेषस्वभावानां निराधारत्वादर्थक्रियाकारित्वाभावः, अर्थक्रियाकारित्वाभावे द्रव्यस्याप्यभावः । अभेदपक्षेऽपि सर्वेषामेकत्वम् सर्वेषामेकत्वेऽर्थक्रियाकारित्वाभाव अर्थक्रियाकारित्वाभावे द्रव्यस्याप्यभावः । भव्यस्यैकान्तेन पारिणामिकत्वात् द्रव्यस्य द्रव्यान्तरत्वप्रसङ्गात् सङ्करादिदोषसम्भवात् । सङ्करव्यतिकरविरोधवैयधिकरण्यानवस्थासंशयाप्रतिपत्त्यभावाश्चेति । सर्वथाऽभव्यस्यैकान्तेऽपि तथा शून्यताप्रसंगात् स्वभावरूपस्यैकान्तेन संसाराभावः ।

विभावपक्षेऽपि मोक्षस्याप्यभावः। सर्वथा चैतन्यमेवेत्युक्ते सर्वेषां शुद्धज्ञानचैतन्यावाप्तिः स्यात्, तथा सति ध्यानं ध्येयं ज्ञानं ज्ञेयं गुरुशिष्याद्यभावः। सर्वथाशब्दः सर्वप्रकारवाची, अथवा सर्वकालवाची, अथवा नियमवाची, वा अनेकान्तसापेक्षी वा? यदि सर्वप्रकारवाचा सर्वकालवाची अनेकान्तवाची वा सर्वादिगणे पठनात् सर्वशब्द एवंविधश्चेत्तर्हि सिद्धं नः समीहितम्। अथवा नियमवाची चेत्तर्हि सकलार्थानां तव प्रतीतिः कथं स्यात्? नित्यः, अनित्यः, एकः, अनेकः, भेदः, अभेदः कथं प्रतीतिः स्यात् नियमितपक्षत्वात्। तथा चैतन्यपक्षेऽपि सकलचैतन्योच्छेदः स्यात्, मूर्तस्यैकान्तेतात्मनो मोक्षस्यावाप्तिः स्यात्। सर्वथाऽमूर्तस्यापि तथात्मनः संसारविलोपः स्यात् एकप्रदेशस्यैकान्तेनाखण्डपरिपूर्णस्यात्मनोऽनेककार्यकारित्व एव हानिः स्यात्। सर्वथाऽनेकप्रदेशत्वेऽपि तथा तस्यानर्थकार्यकारित्वं स्वस्वभावशून्यताप्रसङ्गात्। शुद्धस्यैकान्तेनात्मनो न कर्ममलकलङ्कावलेपः सर्वथा निरञ्जनत्वात्। सर्वथाऽशुद्धैकान्तेऽपि तथात्मनो न कदापि शुद्धस्वभावप्रसङ्गः स्यात् तन्मयत्वात्। उपचरितैकान्तपक्षेऽपि नात्मज्ञता सम्भवति नियमितपक्षत्वात्। तथात्मनोऽनुपचरितपक्षेऽपि परज्ञतादीनां विरोधः स्यात्।

"नानास्वभावसंयुक्तं द्रव्यं ज्ञात्वा प्रमाणतः।
तच्च सापेक्षसिद्ध्यर्थं स्यान्नयमिश्रितं कुरु" ॥१०॥

स्वद्रव्यादिग्राहकेणास्तिस्वभावः। परद्रव्यादिग्राहकेण

नास्तिस्वभावः । उत्पादव्ययगौणत्वेन सत्ताग्राहकेण नित्यस्वभावः। केनचित्पर्यायार्थिकेनानित्यस्वभावः। भेदकल्पनानिरपेक्षेणैकस्वभावः। अन्वयद्रव्यार्थिकेनैकस्याप्यनेकद्रव्यस्वभावत्वम्। सद्भूतव्यवहारेण गुणगुण्यादिभिर्भेदस्वभावः। भेदकल्पनानिरपेक्षेण गुणगुण्यादिभिरभेदस्वभावः। परमभावग्राहकेण भव्याभव्यपारिणामिकस्वभावः। शुद्धाशुद्धपरमभावग्राहकेण चेतनस्वभावो जीवस्य। असद्भूतव्यवहारेण कर्मनोकर्मणोरपि चेतनस्वभावः। परमभावग्राहकेण कर्मनोकर्मणोरचेतनस्वभावः।

जीवस्याप्यसद्भूतव्यवहारेणाचेतनस्वभावः। परमभावग्राहकेण कर्मनोकर्मणोर्मूर्त्तस्वभावः। जीवस्याप्यासद्भूतव्यवहारेण मूर्त्तस्वभावः। परमभावग्राहकेण पुद्गलं विहाय इतरेषाममूर्त्तस्वभावः। पुद्गलस्योपचारादपि नास्त्यमूर्त्तत्वम्। परमभावग्राहकेण कालपुद्गलाणूनामेकप्रदेशस्वभावत्वम्। भेदकल्पनानिरपेक्षेणेतरेषां धर्माधर्माकाशजीवानां चाखण्डत्वादेकप्रदेशत्वम्। भेदकल्पनासापेक्षेण चतुर्णामपि नानाप्रदेशस्वभावत्वम्। पुद्गलाणोरुपचारतो नानाप्रदेशत्वं न च कालाणोः स्निग्धरूक्षत्वाभावात्। अरूक्षत्वाच्चाणोरमूर्त्तपुद्गलस्यैकविंशतितमो भावो न स्यात्। परोक्षप्रमाणापेक्षयाऽसद्भूतव्यवहारेणाप्युपचारेणामूर्त्तत्वं। पुद्गलस्य शुद्धाशुद्धद्रव्यार्थिकेन विभावस्वभावत्वम्। शुद्धद्रव्यार्थिकेन शुद्धस्वभावः। अशुद्धद्रव्यार्थिकेनाशुद्धस्वभावः। असद्भूतव्यवहारेणोपचरितस्वभावः।

"द्रव्याणां तु यथारूपं तल्लोकेऽपि व्यवस्थितम् ।
तथाज्ञानेन संज्ञातं नयोऽपि हि तथाविधः" ॥११॥

इति नययोजनिका ।

—०—

सकलवस्तुग्राहकं प्रमाणं, प्रमीयते परिच्छिद्यते वस्तुतत्त्वं येन ज्ञानेन तत्प्रमाणम् । तद्द्वेधा सविकल्पेतरभेदात् । सविकल्पं मानसं तच्चतुर्विधम् । मतिश्रुतावधिमनःपर्ययरूपम् । निर्विकल्पं मनोरहितं केवलज्ञानमिति प्रमाणस्य व्युत्पत्तिः । प्रमाणेन वस्तु संगृहीतार्थैकांशो नयः, श्रुतविकल्पो वा, ज्ञातुरभिप्रायो वा नयः, नानास्वभावेभ्यो व्यावृत्य एकस्मिन्स्वभावे वस्तु नयति प्राप्नोतीति वा नयः । स द्वेधा सविकल्पनिर्विकल्पभेदादिति नयस्य व्युत्पत्तिः । प्रमाणनययोर्निक्षेप आरोपणं स नामस्थापनादिभेदेन चतुर्विध इति निक्षेपस्य व्युत्पत्तिः । द्रव्यमेवार्थः प्रयोजनमस्येति द्रव्यार्थिकः । शुद्धद्रव्यमेवार्थः प्रयोजनमस्येति शुद्धद्रव्यार्थिकः । अशुद्धद्रव्यमेवार्थः प्रयोजनमस्येति अशुद्धद्रव्यार्थिकः । सामान्यगुणादयोऽन्वयरूपेण द्रव्यं द्रव्यमिति द्रवति व्यवस्थापयतीत्यन्वयद्रव्यार्थिकः । स्वद्रव्यादिग्रहणमर्थः प्रयोजनमस्येति स्वद्रव्यादिग्राहकः । परद्रव्यादि ग्रहणमर्थः प्रयोजनमस्येति परद्रव्यादिग्राहकः । परमभावग्रहणमर्थः प्रयोजनमस्येति परमभावग्राहकः ।

इति द्रव्यार्थिकस्य व्युत्पत्तिः ।

—०—

पर्याय एवार्थः प्रयोजनमस्येति पर्यायार्थिकः। अनादिनित्यपर्याय एवार्थः प्रयोजनमस्येत्यनादिनित्यपर्यायार्थिकः। सादिनित्यपर्याय एवार्थः प्रयोजनमस्येति सादिनित्यपर्यायार्थिकः। शुद्धपर्याय एवार्थः प्रयोजनमस्येति शुद्धपर्यायार्थिकः। अशुद्धपर्याय एवार्थः प्रयोजनमस्येत्यशुद्धपर्यायार्थिकः।

इति पर्यायार्थिकस्य व्युत्पत्तिः।

—०—

नैकं गच्छतीति निगमः, निगमो विकल्पस्तत्रभवो नैगमः। अभेदरूपतया वस्तुजातं संगृह्णातीति संग्रहः। संग्रहेण गृहीतार्थस्य भेदरूपतया वस्तु व्यवह्रियत इति व्यवहारः। ऋजु प्रांजलं सूत्रयतीति ऋजुसूत्रः। शब्दात् व्याकरणात् प्रकृतिप्रत्ययद्वारेण सिद्धः शब्दः शब्दनयः। परस्परेणाभिरूढाः समभिरूढाः। शब्दभेदेऽप्यर्थभेदो नास्ति। यथा शक्र इन्द्रः पुरन्दर इत्यादयः समभिरूढाः। एवंक्रियाप्रधानत्वेन भूयत इत्येवंभूतः। शुद्धाशुद्धनिश्चयौ द्रव्यार्थिकस्य भेदौ। अभेदानुपचारतया वस्तु निश्चीयत इति निश्चयः। भेदापचारतया वस्तु व्यवह्रियत इति व्यवहारः। गुणगुणिनोः संज्ञादिभेदात् भेदकः सद्भूतव्यवहारः। अन्यत्र प्रसिद्धस्य धर्मस्यान्यत्र समारोपणमसद्भूतव्यवहारः। असद्भूतव्यवहार एवोपचारः, उपचारादप्युपचारं यः करोति स उपचरितासद्भूतव्यवहारः। गुणगुणिनोःपर्यायपर्यायिणोः स्वभावस्वभाविनोः कारककारकिणोर्भेद सद्भूतव्यवहारस्यार्थः। द्रव्ये द्रव्योपचारः, पर्याये

पर्यायोपचारः, गुणे गुणोपचारः, द्रव्ये गुणोपचारः, द्रव्ये पर्यायोपचारः, गुणे द्रव्योपचारः, गुणे पर्यायोपचारः, पर्याये द्रव्योपचारः, पर्याये गुणोपचार इति नवविधोऽसद्भूतव्यवहारस्यार्थो द्रष्टव्यः।

उपचारः पृथग् नयो नास्तीति न पृथक् कृतः। मुख्याभावे सति प्रयोजने निमित्ते चोपचारः प्रवर्तते सोऽपि सम्बन्धाविनाभावः। संश्लेषः सम्बन्धः। परिणामपरिणामिसम्बन्धः, श्रद्धाश्रद्धेयसम्बन्धः, ज्ञानज्ञेयसम्बन्धः, चारित्रचर्यासम्बन्धश्चेत्यादिसत्यार्थः, असत्यार्थः, सत्यासत्यार्थश्चेत्युपचरितासद्भूतव्यवहारनयस्यार्थः।

पुनरप्यध्यात्मभाषया नया उच्यन्ते। तावन्मूलनयौ द्वौ निश्चयो व्यवहारश्च। तत्र निश्चयनयोऽभेदविषयो व्यवहारो भेदविषयः। तत्र निश्चयो द्विविधः शुद्धनिश्चयोऽशुद्धनिश्चयश्च। तत्र निरुपाधिकगुणगुण्यभेदविषयकोशुद्धनिश्चयो यथा—केवलज्ञानादयो जीव इति। सोपाधिकविषयोऽशुद्धनिश्चयो यथा—मतिज्ञानादयो जीव इति। व्यवहारो द्विविधः सद्भूतव्यवहारोऽसद्भूतव्यवहारश्च। तत्रैकवस्तुविषयः सद्भूतव्यवहारः, भिन्नवस्तुविषयोऽसद्भूतव्यवहारस्तत्रसद्भूतव्यवहारो द्विविधः उपचरितानुपचरितभेदात्। तत्र सोपाधिगुणगुणिनोर्भेदविषयः उपचरितसद्भूतव्यवहारो यथा—जीवस्य मतिज्ञानादयो गुणाः। निरुपाधिगुणगुणिनोर्भेदविषयोऽनुपचरितसद्भूतव्यवहारो यथा—जीवस्य केवलज्ञानादयो गुणाः। असद्भूतव्यवहारो द्विविधः उपचरिता-

नुपचरितभेदात् । तत्र संश्लेषरहितवस्तुसम्बन्धविषय उपचरितासद्भूतव्यवहारो—यथा देवदत्तस्य धनमिति । संश्लेषसहितवस्तुसम्बन्धविषयोऽनुपचरितासद्भूतव्यवहारो यथा—जीवस्य शरीरमिति ।

इति सुखबोधार्थमालापपद्धतिः श्रीमद्देवसेनविरचिता परिसमाप्ता

—: ० :—

श्रीमन्माणिक्यनन्दिविरचितानि

# १२ परीक्षामुखसूत्राणि ।

प्रमाणादर्थसंसिद्धिस्तदाभासाद्विपर्य्ययः ।
इति वक्ष्ये तयोर्ल्लक्ष्म सिद्धमल्पं लघीयसः ॥१॥

स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणं ॥ १ ॥ हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणं ततो ज्ञानमेव तत् ॥ २ ॥ तन्निश्चयात्मकं समारोपविरुद्धत्वादनुमानवत् ॥ ३ ॥ अनिश्चितोऽपूर्वार्थः ॥ ४ ॥ दृष्टोऽपि समारोपात्तादृक् ॥ ५ ॥ स्वोन्मुखतया प्रतिभासनं स्वस्य व्यवसायः ॥ ६ ॥ अर्थस्येव तदुन्मुखतया ॥ ७ ॥ घटमहमात्मना वेद्मि ॥ ८ ॥ कर्मवत्कर्तृकरणक्रियाप्रतीतेः ॥ ९ ॥ शब्दानुच्चारणेऽपि स्वस्यानुभवनमर्थवत् ॥ १० ॥ को वा तत्प्रतिभासिनमर्थमध्यक्षमिच्छंस्तदेव तथा नेच्छेत् ॥११॥ प्रदीपवत् ॥ १२ ॥ तत्प्रामाण्यं स्वतः परतश्च ॥ १३ ॥

इति प्रमाणस्य स्वरूपोद्देशः प्रथमः ॥ १ ॥

तद्द्वेधा ॥ १ ॥ प्रत्यक्षेतरभेदात् ॥ २ ॥ विशदं प्रत्यक्षं

॥ ३ ॥ प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यं ॥ ४ ॥ इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकम् ॥ ५ ॥ नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवत् ॥ ६ ॥ तदन्वयव्यतिरेकानुविधानाभावाच्च केशोण्डुकज्ञानवन्नक्तंचरज्ञानवच्च ॥ ७ ॥ अतज्जन्यमपि तत्प्रकाशकं प्रदीपवत् ॥ ८ ॥ स्वावरणक्षयोपशमलक्षणयोग्यतया हि प्रतिनियतमर्थं व्यवस्थापयति ॥ ९ ॥ कारणस्य च परिच्छेद्यत्वे करणादिना व्यभिचारः ॥ १० ॥ सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यं ॥ ११ ॥ सावरणत्वे करणजन्यत्वे च प्रतिबन्धसम्भवात् ॥१२ ॥

इति प्रत्यक्षोद्देशः द्वितीयः ॥ २ ॥

परोक्षमितरत् ॥ १ ॥ प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदं ॥ २ ॥ संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिः ॥ ३ ॥ स देवदत्तो यथा ॥ ४ ॥ दर्शनस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञानं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि ॥ ५ ॥ यथा स एवायं देवदत्तः गोसदृशो गवयः गोविलक्षणो महिष इदमस्माद्दूरं वृक्षोऽयमित्यादि ॥ ६ ॥ उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः इदमस्मिन्सत्येव भवत्यसति न भवत्येवेति च ॥ ७ ॥ यथाग्नावेव धूमस्तदभावे न भवत्येवेति च ॥ ८ ॥ साधनात्साध्यविज्ञानमनुमानं ॥ ९ ॥ साध्याविनाभावित्वेन निश्चितो हेतुः ॥ १० ॥ सहक्रमभावनियमोऽविनाभावः ॥ ११ ॥ सहचारिणोर्व्याप्यव्यापकयोश्च सहभावः ॥ १२ ॥ पूर्वोत्तरचारिणोः कार्यकारणयोश्च क्रमभावः

॥ १३ ॥ तर्कात्तन्निर्णयः ॥ १४ ॥ इष्टमबाधितमसिद्धं साध्यं ॥ १५ ॥ सन्दिग्धविपर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यसिद्धपदं ॥ १६ ॥ अनिष्टाध्यक्षादिबाधितयोः साध्यत्वं माभूदितीष्टाबाधितवचनं ॥ १७ ॥ न चासिद्धवदिष्टं प्रतिवादिनः ॥१८॥ प्रत्यायनाय हीच्छा वक्तुरेव ॥१९॥ साध्यं धर्मः क्वचित्तद्विशिष्टो वा धर्मी ॥२०॥ पक्ष इति यावत् ॥२१॥ प्रसिद्धो धर्मी ॥२२॥ विकल्पसिद्धे तस्मिन्सत्तेतरे साध्ये ॥२३॥ अस्ति सर्वज्ञो नास्ति खरविषाणं ॥२४॥ प्रमाणोभयसिद्धे तु साध्यधर्मविशिष्टता ॥२५॥ अग्निमानयं देशः परिणामी शब्द इति यथा ॥२६॥ व्याप्तौ तु साध्यं धर्म एव ॥२७॥ अन्यथा तदघटनात् ॥२८॥ साध्यधर्म्माधारसन्देहापनोदाय गम्यमानस्यापि पक्षस्य वचनं ॥२९॥ साध्यधर्मिणि साधनधर्मावबोधनाय पक्षधर्मोपसंहारवत् ॥३०॥ को वा त्रिधा हेतुमुक्त्वा समर्थयमानो न पक्षयति ॥३१॥ एतद्द्वयमेवानुमानांगं नोदाहरणं ॥३२॥ न हि तत्साध्यप्रतिपत्त्यंगं तत्र यथोक्तहेतोरेव व्यापारात् ॥३३॥ तदविनाभावनिश्चयार्थं वा विपक्षे बाधकादेव तत्सिद्धेः ॥३४॥ व्यक्तिरूपं च निदर्शनं सामान्येन तु व्याप्तिस्तत्रापि तद्विप्रतिपत्तावनवस्थानं स्याद् दृष्टान्तान्तरापेक्षणात् ॥३५॥ नापि व्याप्तिस्मरणार्थं तथाविधहेतुप्रयोगादेव तत्स्मृतेः ॥३६॥ तत्परमभिधीयमानं साध्यधर्मिणि साध्यसाधने सन्देहयति ॥३७॥ कुतोऽन्यथोपनयनिगमने ॥३८॥ न च ते तदङ्गे, साध्यधर्मिणि हेतुसाध्ययोर्वचनादेवासंशयात्

॥ ३९ ॥ समर्थनं वा वरं हेतुरूपमनुमानावयवो वाऽस्तु साध्ये तदुपयोगात् ॥४०॥ बालव्युत्पत्त्यर्थं तत्त्रयोपगमे शास्त्र एवासौ न वादेऽनुपयोगात् ॥४१॥ दृष्टान्तो द्वेधाऽन्वयव्यतिरेकभेदात् ॥४२॥ साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टान्तः ॥४३॥ साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टान्तः ॥४४॥ हेतोरुपसंहार उपनयः ॥४५॥ प्रतिज्ञायास्तु निगमनं ॥४६॥ तदनुमानं द्वेधा ॥४६॥ स्वार्थपरार्थभेदात् ॥४८॥ स्वार्थमुक्तलक्षणं ॥४९॥ परार्थं तु तदर्थपरामर्शवचनाज्जातं ॥५०॥ तद्वचनमपि तद्धेतुत्वात् ॥५१॥ स हेतुर्द्विधोपलब्ध्यनुपलब्धिभेदात् ॥५२॥ उपलब्धिर्विधिप्रतिषेधयोरनुपलब्धिश्च ॥५३॥ अविरुद्धोपलब्धिर्विधौ षोढा व्याप्यकार्यकारणपूर्वोत्तरसहचरभेदात् ॥५४॥ रसादेकसामग्र्यनुमानेन रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित्कारणं हेतुर्यत्र सामर्थ्याप्रतिबन्धकारणान्तरावैकल्ये ॥५५॥ न च पूर्वोत्तरचारिणोस्तादात्म्यं तदुत्पत्तिर्वा कालव्यवधाने तदनुपलब्धेः ॥५६॥ भाव्यतीतयोर्मरणजाग्रद्बोधयोरपि नारिष्टोद्बोधौ प्रति हेतुत्वम् ॥५७॥ तद्व्यापाराश्रितं हि तद्भावभावित्वम् ॥५८॥ सहचारिणोरपि परस्परपरिहारेणावस्थानात्सहोत्पादाच्च ॥५९॥ परिणामी शब्दः कृतकत्वात् एवं स एवं दृष्टो यथा घटः, कृतकश्चायं, तस्मात्परिणामीति, यस्तु न परिणामी स न कृतको दृष्टो यथा वन्ध्यास्तनन्धयः, कृतकश्चायं, तस्मात्परिणामी ॥६०॥ अस्त्यत्र देहिनि बुद्धिर्व्याहारादेः ॥६१॥

अस्त्यत्रच्छाया छत्रात् ॥ ६२ ॥ उदेष्यति शकटं कृत्तिकोदयात् ॥६३॥ उदगाद्भरणिः प्राक् तत एव ॥६४॥ अस्त्यत्र मातुलिंगे रूपं रसात् ॥६५॥ विरुद्धतदुपलब्धिः प्रतिषेधे तथा ॥६६॥ नास्त्यत्र शीतस्पर्श औष्ण्यात् ॥६७॥ नास्त्यत्र शीतस्पर्शो धूमात् ॥६८॥ नास्मिन् शरीरिणि सुखमस्ति हृदयशल्यात् ॥६९॥ नोदेष्यति मुहूर्तान्ते शकटं रेवत्युदयात् ॥ ७० ॥ नोदगाद्भरणिर्मुहूर्तात्पूर्वं पुष्योदयात् ॥ ७१ ॥ नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागदर्शनात् ॥७२॥ अविरुद्धानुपलब्धिः प्रतिषेधे सप्तधा स्वभावव्यापककार्यकारणपूर्वोत्तरसहचरानुपलम्भभेदात् ॥ ७३ ॥ नास्त्यत्र भूतले घटोऽनुपलब्धेः ॥ ७४ ॥ नास्त्यत्र शिंशपा वृक्षानुपलब्धेः ॥ ७५ ॥ नास्त्यत्राप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धेः ॥ ७६ ॥ नास्त्यत्र धूमोऽनग्नेः ॥७७। न भविष्यति मुहूर्तान्ते शकटं कृत्तिकोदयानुपलब्धेः ॥७८॥ नोदगाद्भरणिर्मुहूर्तात्प्राक्तत एव ॥७९॥ नास्त्यत्र समतुलायामुन्नामोऽनामानुपलब्धेः ॥ ८० ॥ विरुद्धानुपलब्धिर्विधौ त्रेधा विरुद्धकार्यकारणस्वभावानुपलब्धिभेदात् ॥ ८१ ॥ यथास्मिन्प्राणिनि व्याधिविशेषोऽस्ति निरामयचेष्टानुपलब्धेः ॥ ८२॥ अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् ॥८३॥ अनेकान्तात्मकं वस्त्वेकान्तस्वरूपानुपलब्धेः ॥ ८४ ॥ परम्परया संभवत्साधनमत्रैवान्तर्भावनीयम् ॥८५॥ अभूदत्र चक्रे शिवकः स्थासात् ॥ ८६ ॥ कार्यकार्यमविरुद्धकार्योपलब्धौ ॥८७॥ नास्त्यत्र गुहायां मृगक्रीडनं मृगारिसंशब्दनात्,

कारणविरुद्धकार्योपलब्धौ यथा ॥८८॥ व्युत्पन्नप्रयोगस्तु तथोपपत्त्याऽन्यथानुपपत्त्यैव वा ॥८९॥ अग्निमानयं देशस्तथैव धूमवत्त्वोपपत्तेर्धूमवत्त्वानुपपत्तेर्वा ॥९०॥ हेतुप्रयोगो हि यथा व्याप्तिग्रहणं विधीयते सा च तावन्मात्रेण व्युत्पन्नैरवधार्यते ॥९१॥ तावता च साध्यसिद्धिः ॥९२॥ तेन पक्षस्तदाधारसूचनायोक्तः ॥९३॥ आप्तवचनादिनिबन्धनमर्थज्ञानमागमः ॥९४॥ सहजयोग्यतासङ्केतवशाद्धि शब्दादयो वस्तुप्रतिपत्तिहेतवः ॥९५॥ यथा मेर्वादयः सन्ति ॥९६॥

इति परोक्षप्रपंचस्तृतीयः समुद्देशः ॥३॥

सामान्यविशेषात्मातदर्थो विषयः ॥१॥ अनुवृत्तव्यावृत्तप्रत्ययगोचरत्वात्पूर्वोत्तराकारापरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तेश्च ॥२॥ सामान्यं द्वेधा तिर्यगूर्ध्वताभेदात् ॥३॥ सदृशपरिणामस्तिर्यक् खण्डमुण्डादिषु गोत्ववत् ॥४॥ परापरविवर्तव्यापिद्रव्यमूर्ध्वता मृदिव स्थासादिषु ॥५॥ विशेषश्च ॥६॥ पर्य्यायव्यतिरेकभेदात् ॥७॥ एकस्मिन्द्रव्ये क्रमभाविनः परिणामाः पर्याया आत्मनिहर्षविषादादिवत् ॥८॥ अर्थान्तरगतो विसदृशपरिणामो व्यतिरेको गोमहिषादिवत् ॥९॥

इति प्रमाणस्य विषयसमुद्देशश्चतुर्थः ॥ ४ ॥

अज्ञाननिवृत्तिर्हानोपादानोपेक्षाश्च फलम् ॥१॥ प्रमाणादभिन्नं भिन्नं च ॥२॥ यः प्रमिमीते स एव निवृत्ताज्ञानो जहात्यादत्त उपेक्षते चेति प्रतीतेः ॥३॥

इति प्रमाणस्य फलसमुद्देशः पंचमः ॥५॥

ततोऽन्यत्तदाभासम् ॥१॥ अस्वसंविदितगृहीतार्थदर्शन-संशयादयः प्रामाणाभासाः ॥२॥ स्वविषयोपदर्शकत्वाभावात् ॥३॥ पुरुषान्तरपूर्वार्थगच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् ॥४॥ चक्षूरसयोर्द्रव्ये संयुक्तसमवायवच्च ॥५॥ अवैशद्ये प्रत्यक्षं तदाभासं बौद्धस्याकस्माद्धूमदर्शनाद्वह्निविज्ञानवत् ॥६॥ वैशद्येऽपि परोक्षं तदाभासं मीमांसकस्य करणज्ञानवत् ७ अतस्मिंस्तदिति ज्ञानं स्मरणाभासं जिनदत्ते स देवदत्तो यथा ॥८॥ सदृशे तदेवेदं तस्मिन्नेव तेन सदृशं यमलकवदित्यादिप्रत्यभिज्ञानाभासं ॥९॥ असम्बद्धे तज्ज्ञानं तर्काभासं यावांस्तत्पुत्र स श्याम इति यथा ॥१०॥ इदमनुमानाभासम् ॥११॥ तत्रानिष्टादिः पक्षाभासः ॥१२॥ अनिष्टो मीमांसकस्यानित्यः शब्दः ॥१३॥ सिद्धः श्रावणः शब्दः ॥१४॥ बाधितः प्रत्यक्षानुमानागमलोकस्ववचनैः ॥१५॥ तत्र प्रत्यक्षबाधितो यथा अनुष्णोऽग्निर्द्रव्यत्वाज्जलवत् ॥ १६ ॥ अपरिणामी शब्द कृतकत्वात् घटवत् ॥१७॥ प्रेत्यासुखप्रदो धर्मः पुरुषाश्रितत्वादधर्मवत् ॥१८॥शुचि नरशिर कपालं प्राण्यङ्गत्वाच्छङ्खशुक्तिवत् ॥१९॥ माता मे वन्ध्या पुरुषसंयोगेऽप्यगर्भत्वात्प्रसिद्धवन्ध्यावत् ॥२०॥ हेत्वाभासा असिद्धविरुद्धानैकान्तिकाकिञ्चित्कराः ॥२१॥ असत्सत्तानिश्चयोऽसिद्धः ॥२२॥ अविद्यमानसत्ताकः परिणामी शब्दश्चाक्षुषत्वात् ॥२३॥ स्वरूपेणैवासिद्धत्वात् ॥२४॥ अविद्यमाननिश्चयो मुग्धबुद्धिं प्रत्यग्निरत्र धूमात् ॥२५॥ तस्य बाष्पादिभावेन भूतसंघाते संदेहात् ॥२६॥ सांख्यं प्रति परिणामी शब्दः कृतकत्वात् ॥२७॥

तेनाज्ञातत्वात् ॥२८॥ विपरीतनिश्चिताविनाभावो विरुद्धोऽपरिणामी शब्दः कृतकत्वात् ॥२९॥ विपक्षेऽप्यविरुद्धवृत्तिरनैकान्तिकः ॥३०॥ निश्चितवृत्तिरनित्यः शब्दः प्रमेयत्वाद् घटवत् ॥३१॥ आकाशे नित्येऽप्यस्य निश्चयात् ॥३२॥ शङ्कितवृत्तिस्तु नास्ति सर्वज्ञो वक्तृत्वात् ॥३३॥ सर्वज्ञत्वेन वक्तृत्वाविरोधात् ॥३४॥ सिद्धे प्रत्यक्षादिबाधिते च साध्ये हेतुरकिञ्चित्करः ॥३५॥ सिद्धः श्रावणः शब्दः शब्दत्वात् ॥३६॥ किञ्चिदकरणात् ॥३७॥ यथाऽनुष्णोऽग्निर्द्रव्यत्वादित्यादौ किञ्चित्कर्तुमशक्यत्वात् ॥३८॥ लक्षण एवासौ दोषो व्युत्पन्नप्रयोगस्तय पक्षदोषेणैव दुष्टत्वात् ॥३९॥ दृष्टान्ताभासा अन्वयेऽसिद्धसाध्यसाधनोभयाः ॥४०॥ अपौरुषेयः शब्दोऽमूर्तत्वादिन्द्रियसुखपरमाणुघटवत् ॥४१॥ विपरीतान्वयश्च यदपौरुषेयं तदमूर्तम् ॥४२॥ विद्युदादिनाऽतिप्रसङ्गात् ॥४३॥ व्यतिरेके सिद्धतद्व्यतिरेकाः परमाण्विन्द्रियसुखाकाशवत् ॥४४॥ विपरीतव्यतिरेकश्च यन्नामूर्तं तन्नापौरुषेयम् ॥४५॥ बालप्रयोगाभासः पञ्चावयवेषु कियद्धीनता ॥४६॥ अग्निमानयं देशोधूमवत्वात् यदित्थं तदित्थं यथा महानसः ॥४७॥ धूमवांश्चायमिति वा ॥४८॥ तस्मादग्निमान्न धूमवांश्चायम् ॥४९॥ स्पष्टतया प्रकृतप्रतिपत्तेरयोगात् ॥५०॥ रागद्वेषमोहाक्रान्तपुरुषवचनाज्जातमागमाभासम् ॥५१॥ यथा नद्यास्तीरे मोदकराशयः सन्ति धावध्वं माणवकाः ॥५२॥ अंगुल्यग्रे हस्तियूथशतमास्त इति च ॥५३॥ विसंवदात् ॥५४॥ प्रत्यक्षमेवैकं प्रमाणमित्यादिसंख्याभासम् ॥५५॥ लौकायतिकस्य

प्रत्यक्षतः परलोकादिनिषेधस्य परबुद्ध्यादेश्चासिद्धेरतद्विषयत्वात् ॥५६॥ सौगतसांख्ययौगप्रभाकरजैमिनीयानां प्रत्यक्षानुमानागमोपमनार्थापत्त्यभावैरेकैकाधिकैर्व्याप्तिवत् ॥५७॥ अनुमानादेस्तद्विषयत्वे च प्रमाणान्तरत्वम् ॥५८॥ तर्कस्येव व्याप्तिगोचरत्वे प्रमाणान्तरत्वमप्रमाणस्याव्यवस्थापकत्वात् ॥५९॥ प्रतिभासभेदस्य च भेदकत्वात् ॥६०॥ विषयाभासः सामान्यं विशेषो द्वयं वा स्वतन्त्रम् ॥६१॥ तथाप्रतिभासनात्कार्याकरणाच्च ।६२॥ समर्थस्य करणे सर्वदोत्पत्तिरनपेक्षत्वात् ॥६३॥ परापेक्षणे परिणामित्वमन्यथा तदभावात् ॥६४॥ स्वयमसमर्थस्याकारकत्वात्पूर्ववत् ॥६५॥ फलाभासं प्रमाणादभिन्नं भिन्नमेव वा ॥६६॥ अभेदे तद्व्यवहारानुपपत्तेः ॥६७॥ व्यावृत्त्याऽपि न तत्कल्पना फलान्तराद्व्यावृत्त्याऽफलत्वप्रसंगात् ॥६८॥ प्रमाणान्तराद्व्यावृत्त्येवाप्रमाणत्वस्य ॥६९॥ तस्माद्वास्तवोऽभेदः ॥७०॥ भेदे त्वात्मान्तरवत्तदनुपपत्ते ॥७१॥ समवायेऽतिप्रसङ्गः ७२॥ प्रमाणतदाभासौ दुष्टतयोद्भावितौ परिहृतापरिहृतदोषौ वादिनः साधनतदाभासौ प्रतिवादिनो दूषणभूषणे च ॥७३॥ सम्भवदन्यद्विचारणीयम् ॥७४॥

परीक्षामुखमादर्शं हेयोपादेयतत्त्वयोः ।
संविदे मादृशो बालः परीक्षादक्षवद्व्यधाम् ।१।

# १३० विशेष गाथासंग्रह

मिच्छोदयेण मिच्छत्तमसद्दहणं तु तच्च अत्थाणं । एयंतं विवरीयं विणयं संसयिदमण्णाणं । मिच्छत्तं वेदंतो जीवो विवरीयदंसणो होदि । णय धम्मं रोचेदि हु महुरं खु रसं जहा जरिदो । आदिमसम्मत्तद्धासम-

यादोछावलित्ति वासेसे। अणअणुदरुदयादोणासियसम्मोत्ति-सासणक्खेोसे। सम्मानिच्छुदयेण य जत्तंतरसव्वधादिकज्जेण। णा य सम्ममिच्छंपियसम्मिस्सोहोदिपरिणामो। णोइंदियेसु विरदोणो जीवेथावरे तसे वापि। जो सद्दहदिजिणुत्तं सम्माइट्ठी अविरदोसो। पच्चक्खाणुदयादो संजमभावोण होदिणवरिं तु। थोववदो होदितदोदेसवदोहोदिपंचमंश्रो। संजलणणोकसायाणु-दंश्रो मंदो जदा तदाहोदि। अपमत्तगुणोतेण य अपमत्तो संजदो होदि। णट्ठासेपमादोवयगुणशीलोलिमंडिजोणाणी। अणुव समंश्रो अखवंश्रो झाणणिलीणोहु अपमत्तो। इगवीसमोहखवणु-वसमणणिमित्ताणितिकरणाणि तहिं। पठमं अधापवत्तंकरणं तु करेदि अपमत्तो; अंतोमुहुत्तकालं गमिऊण अधापवित्तकरणं तं। पडिसमयंसुज्झंतो अपुव्वकरणं समल्लियई। एकम्हि कालसमये संठाणादीहि जहणिवदंति। ण णिवंदति तदावियपरिणामेहिं मिहेजिहिं। होंति अणियट्टिणोते पडिसमयंजेस्सिमेक्कपरिणामा। विमलयरझाणहुयवहसिहाहिंणिद्दड्ढकम्मवणा। धुदकोसुंभयवत्थं होदि जहा सुहुमरायसंजुत्तं। एवं सुहुमकसाश्रो सुहुमसरागोत्ति णादव्वो। कदकफलजुदजलंवारए सराणियं वणिम्मलयं। सयलोवसंतमोहो उवसंतकसायश्रो होदि। णिस्सेसखीणमोहो फलिहामलभायणुदयसमचित्तो। खीणकसाश्रो भण्णादिणिग्गंथो वीयरायेहिं। केवलणाणदिवायरकिरणकलावप्पणासियण्णाणो। णवकेवललद्धुग्गमसुजणियपरमप्पववएसो। असहायणाणदंसण सहिओइदि केवलीहु जोगेण। जुत्तोत्ति सजोगिजिणो अद्दाइणि

हणारिसे उत्तो। सीलेसिंसंपत्तोणिरुद्धणिस्सेसआसवो जीवो। कम्मरयविप्पमुक्को गयजोगो केवली होदि। जेहिं अणेया जीवा णज्जंते बहुविहावि तज्जादा। ते पुण संगहित्था जीवसमासात्ति विण्णेया जेहि दुलक्खिज्जंते उदयादिसु संभवेहिं भावेहिं। जीवा ते गुणसण्णा णिद्दिट्ठा सव्वदरसीहिं। जह पुण्णापुण्णाइं गिह-घडवत्थादियाइं दव्वाइं। तह पुण्णिदरा जीवा पज्जत्तिदरा-मुणेयव्वा बाहिरपाणेहिं जदातहेव अब्भंतरेहिं पाणेहिं। पाणंति जेहिं जीवा पाणा ते होंतिणिद्दिट्ठा। इह जाहि बाहिया विय जीवा पावंति दारुणं दुक्खं। सेवंताविय उभये ताओ चत्तारि सण्णाओ। जाहि व जासु व जीवा मग्गिज्जंते जहा तहा दिट्ठा। ताओ चोद्दस जाणे सुयणाणे मग्गणाहोंति। गइउदयजपज्जाया चउगइगमणस्सहेउवा मई। णारयतिरिक्ख माणुसदेवगइत्तिय हवे चहुधा। असमिंदा जहदेवा अविसेसं अह महंति मण्णंता ईसंतिएक्कमेक्कं इंदा इव इंदिये जाण। जाई अविणाभावी तसथावर उदयजो हवेकाओ। सो जिणमदह्मि भणिओ पुढवीकायादिछब्भेयो। पुग्गलविवाइदेहोदयेण मणव-यणकायजुत्तस्स। जीवस्स जा हुसत्ती कम्मागमकारणं जोगो। पुरुसिच्छिसंढवेदोदयेण पुरुसिच्छिसंढओ भावे। णामोदयेण दव्वेपाएण समा कहिं विसमा। सुहदुक्खसुबहुसस्सं कम्मक्खेत्तं करेदि जीवस्स। सँसारदूरमेरं तेण कसाओत्तिणं वेति। जाणाइ तिकालविसए दव्वगुणे पज्जए य बहुभेदे। पच्चक्खं च परोक्खं अणेण णाणेत्तिणं वेत्ति वदसमिदिकसायाणं दंडाणतहिंदियाण

पंचएहं । बारसयालसाखिग्गहचागजओ संजमो भणिओ । जं सामण्णं गहणं भावाणांणेव कट्टुमायारं । अविसेसदूण अट्ठे दंसणमिदि भण्णये समये । लिपइ अप्पीकीरइएदीए णिय अपुण्णपुण्णं च । जोवोत्तिहोदिलेस्सा लेस्सागुणजावयक्खादा । चंडोणमुचइ वेरं भंडणशीलोय धम्मदयरहिओ । दुट्ठोणयएदि वसं लक्खणमेयँतु किण्हस्स । मंदोवुद्धिविहीणोणिव्विण्णाणीय विसयलोलोय । माणीमायी च तदा आलस्सो चेवमेज्जोय । णिंदावंचणवहुलो धणधण्णेहोदि तिव्वसण्णाय । लक्खणमेयं भवियं समासदोणीललेस्सस्स । रूसईणिंदइ अण्णेदूसइ वहुसो यसोयभयवहुलो । असुयइ परिभवइ पर पसंसये अप्पयं वहुसो । णयपत्तियई परं सो अप्पाणं वियं परंपिमण्णंतो । थूसइ अभित्थुवंतोणय जाणइ हाणिवड्ढि वा । मरणंपत्थेइ रणे देइ सुवहुंगवि थुव्वमाणोहु । ण गणइ कज्जाकज्जं लक्खणमेयं तु काउस्स । जाणइ कज्जाकज्जं सेयमसेयं च सव्वसमयासी । दयदाणरदोयमिद् लक्खणमेयं तु तेउस्स । चागीभद्दो चोक्खो उज्जवकम्मो य खवदि वहुंगपि । साहुगुरुपूजणरदोलक्खणमेयं तु पम्मस्स । णय कुणइ पक्खवायं णवि य णिदाणं समो य सव्वेसिं । णत्थि य रायद्दोसाणेहोवियसुक्कलेस्सस्स । भविया सिद्धी जेसिं जीवाणं ते हवंति भवसिद्धा । तव्विवरीयाऽभव्या संसारादोणसिज्झंति । छप्पंचणवविहाणं अत्थाणं जिणवरोवइट्ठाणं । आणाए अहिगमेण य सद्दहणं होइ सम्मत्तं । णोइंदिय आवरणखओवसमं तज्जवोहणं सण्णा । सा जस्स सोहुसण्णी

इदरोसेसिंदिअवबोहो। उदयावएणसरीरोदयेण तद्देहवयणचित्ताणं। णोकम्मवग्गणाणं गहणं आहारयं णाम। वत्थुणिमित्तं भावो जादो जीवस्य जोहु उवजोगो। सो दुविहोणायव्वो सायारो चेवणायारो। सोलस पणवीस णभं दस चउछक्केक्क बंधवोच्छिण्णा। दुग तीस चदुरपुव्वे पणसोलस जोगिणो एक्को। मिच्छत्तहुंडसंढासंपत्तेयक्खथावरादावं। सुहुमतियं वियलिंदी णिरयदुणिरयाउगं मिच्छे। विदियगुणे अणथीणतिदुभगतिसंठाणसंहदिचउक्कं। दुग्गमणित्थीणीचं तिरियदुगुज्जोवतिरियाऊ अयदेविदियकसाया वज्जं ओरालमणुदुमणुवाऊ। देसे तदियकसाया णियमेणिह बंधवोच्छिण्णा। छट्ठे अथिरं असुहं असादमजसं च अरदिसोगं च। अपमत्ते देवाऊणिट्ठवणं चेव अत्थित्ति। मरणूणम्हि णियट्टीपढमे णिद्दा तदेव पयला य। छट्ठे भागेतित्थं णिमिणं सग्गमणपंचिंदी। तेजदुहारदु समचउसुरवण्णागुरुचउक्कतसणवयं। चरमे हस्सं च रदी भयं जुगुच्छाय बंधवोच्छिण्णा पुरिसं चदुसंजलणं कमेण अणियट्टि पंचभागेसु। पढमं विग्घं दंसणचउजसउच्च च सुहमंते। उवसंतखीणमोहे जोगिम्मि य समयियट्ठिदी सादं। णायव्वो पयडीणं बंधस्संतो अणंतो य। सत्तरसेकग्गसयं चउसत्तत्तरि सगट्ठि तेवट्ठी। बंधाणवट्ठठाणादुवीससत्तारसेकोघे। पणणव इति सत्तरसं अड पंच च चउर छक्क छच्चेव। इति दुग सोलस तीसं बारस उदये अजोगंता मिच्छेमिच्छादावं सुहुमतियं सासणे अणेइंदी। थावरवियलं मिस्सेमिस्से च य उदयवोच्छिण्णा। अयदेविदियकसाया

वेगुव्वियछक्कणिरयदेवाऊ। मणुयतिरियाणुपुवी दुब्भगणादेज्ज अज्जसयंदेसे। तदियकसायातिरियाउज्जोवणीचतिरियगदी। छट्ठे आहारदुगं थीणतियं उदयवोच्छिण्णा। अपमत्ते सम्मत्तं अन्तिमतियसंहदीयऽपुव्वम्हि। छच्चेवणोकसाया अणियट्ठी-भागभागेसु वेदतिय कोहमाणं मायासंजलणमेव सुहुमते सुहुमोलोहो संते वज्जणारायणारायं। खीणकसाय दुचरमे-णिद्दापयला य उदयवोच्छिण्णा। णाणंतरायदसय दंसणच-त्तारिचरिमम्हि। तदियेक्कवज्जणिमिणं थिरसुहसरगदि उरालतेजदुगं। संठाणंवण्णागुरुचउक्क पत्तेयजोगिम्हि तादियेक्कंमणुवगदीपंचदियसुभगतसतिगादेज्जं। जसतित्थंमणुवाऊ उच्चंच अजोगिचरिमम्हि। सत्तरसेक्कारखचदुसहियसयं सगिगिसीदिछुदुसदरी। छावट्ठिसट्ठिणवसगवण्णासदुदालवा-रुदया पणणवइगि सत्तरसं अट्ठट्ठय चदुरछक्कछच्चेव। इगिदुगसोलुगदालं उदीरणाहोति जोगंता। सोलट्ठेक्किगि-छक्कं चदुसेक्कं वादरे अदो एक्कं। खीणे सोलसऽजोगे वायत्तरि तेरुवत्तंते। णिरयतिरिक्खदुवियलंथीणतिगुज्जोव-तावएइंदी। साहरणसुहुमथावर सोलं मज्झिमकसायंट्ठं संढित्थिछक्कसाया पुरिसोकोहो य माणमायं च। थूले सुहुमे लोहो उदयं वाहोदि खीणम्हि। देहादीफस्संता थिरसुहसर सुरविहाय दुगदुभगं। णिमिणाजसणादेज्जं पत्तेयापुण्ण अगुरुचऊ,अणुदयतदियंणीचमजोगिदुचरिमम्हि सत्तवोच्छिण्णा। उदयगवार णराणू तेरस चरिमम्हि वोच्छिण्णा णभतिगिणभ

इगिदोद्दोदसदस सोलट्ठगदिहीणेसु। सत्ता हवंत्ति एवं असहायपरक्क मुद्दिट्ठं। छसुसगविहमट्ठविहं कम्मंबंधन्ति तिसुयसत्तविहं। छव्विहमेक्कट्ठाणेतिसु एक्कमवंधगो एक्को। चत्तारि तिण्णितियचउपयडिट्ठाणाणिमूलपयडीणं। भुजगारप्पदराणिय अवट्ठिदाणिविकमे होंति अट्ठुदओ सुहुमोत्तिय मोहेण विणाहु संतरवीणेसु। घादिदराणचउक्कस्सुदओ केवलिदुगेण्हियमा संतोत्ति अट्ठसत्ता खीणे सत्तेव होंतिसत्ताणि। जोगिम्ह अजोगिम्हि य चत्तारि हवंति सत्ताणि। णवछक्क चदुक्कंच य विदियावरणस्य बंधणाणि। भुजगारप्पदराणि य अवट्ठिदाणिविय जाणाहि। णव सासणोत्तिबंधो छच्चेव अपुव्वपढमभागोत्ति। चत्तारिहोंति तत्तो सुहुमकसायस्स चरिमोत्ति खीणोत्ति चार उदया पंचसुणिद्दासुदोसुणिद्दासु। एक्के उदयंपत्तो खीणदुचरिमोत्तिय पंचुदया। मिच्छादुवसंतोत्तिय अणियट्टीखवगपढमभागोत्ति। णवसत्ता खीणस्सदुचरिमोत्तिय छच्चदूवरिमे। वावीसमे क्कवीसं सत्तारस तेरसेवणवपंच। चदुतिय दुगं च एक्कं बंधट्ठाणाणिमोहस्स। वावीसमेक्कवीसंसत्तर सत्तारतेरतिसुणवयं। थूलेपणचदुतिय दुगमेक्कं मोहस्सठाणाणि। छब्बावीसे चदुइगवीसे दोद्दो हवंति छट्ठोत्ति। एक्केक्कमदो भंगोबंधट्ठाणेसु मोहस्स। दसवीसं एक्कारस तेत्तीसं मोहबंधठाणाणि। भुजगारप्पदराणि अवट्ठिदाणिविय सामण्णे। सत्तावीसहियसयं पणदालं पचहत्तरिहियसयं। भुजगारप्पदराणि य अवट्ठिदाणिविसेसेण। णभ चउवीसं वारस वीसं चउरट्ठवीस दोद्दाय। थूले पणगादीणं तियतियमिच्छादिभुजगारा। अप्पदरा

पुणतीसं णभ णभ छद्दोण्णि दोण्णि णभ एक्कं। थूले पणगादीणं एक्केक्के अन्तिमे सुण्णं। दसणव अट्ठयसत्तय छप्पण चत्तारिदोण्णि एक्कंच। उदयट्ठाणा मोहे णव चेव यहोंति णियमेण। एक्कयछक्केयारं एयारेयारसेव णव तिण्णि। एदे चउवीसगदा चदुवीसेयार दुगठाणे। अट्ठय सत्तय छक्कय चदुतिदुगेगाधिगाणि वीसाणि वीसाणि। तेरसबारेयारं पणादि एगूणयंसत्तं। पढमतिगं च य पढमपढमंचउवीसयं च मिस्सम्हि पढमं चउवीसचऊ अविरददेसेमत्तिदरे। अउचउरेक्कावीसं उवसमसेढिम्हि खवगसेढिम्हि। एक्कावीसंसत्ता अट्ठकसाया णियट्टित्ति। इगिचदुबंधक्खवगे तेरस बारस एगार चउसत्ता। तिदुइगिबंधे तिदुइ गि णव गुच्छिट्ठाणमविवक्खा तेवीसं, पणवीसं छव्वीसं, अट्ठवीस, णुगतीसं। तीसे.क्कतीस,मेवंएक्को, बंधोदुसेढिम्हि एयक्खअपजत्तं, इगिपज्जत्तवितिचपणरापजतं, एइंदिपजत्तं सुरणिरयगईहिं संजुत्तं। पजत्तगवितिचपमणुसदेवगदिसंजुदाणि, दोण्णि, पुणो। सुरगइजुद, मणइजुदं बंधट्ठाणाणि णामस्स वीसंइगिचउवीसं तत्तो इगितीसओत्ति एयधियं। उदयट्ठाणा एवं

२१ २४ २५

णवअट्ठय होंति णामस्से। चदुगदिया एइंदी विसेसणुदेवणि-

२६ २७

रयएइंदी। इगिवितिचपसामण्णा विसेससुरणारगेइंदी। सामण्ण-

२८-२९ ३०

सयलवियलविसेसमणुससुरणारयादोण्हं। सयलवियलसामण्णा

पुरुष पुरुष

३१ ६—८

सजोगपंचक्खवियलया सामी तिदुइगिणउदीणउदी अउचउदो

अयोगी

अहियसीदि सीदीय। उणसीदट्ठतरि सत्तत्तरिदसय णवसत्ता। सव्वंतित्थोहारुभऊणं सुरणीरयदुचारिदुगे। उव्वेलेदेहदे च उतेरे जोगिस्स दसणवयं। मिच्छत्तं अविरमणं कसायजोगाय आसवाहोंति। पणवारस पणुवीसं पण्णरसा होंति तब्भेया। पणवण्णा पण्णासातिदाल छादाल सत्ततीसाय चदुवीसा वावीसामपुव्वकरणोत्ति थूलेसोलसपहुदी एगूणं जाव होदि दस ठाणं। सुहुमादिसुदसणवयं णक्यं जोगिम्मि सत्तेव। दस अट्ठारस दसयं सत्तर णवसोलसच दोण्हंपि। अट्ठय चोद्दस, पणयंसत्ततिये, दुगेगमेगमदो चउगइ भव्वो सण्णी पुण्णो गब्भज विसुद्ध सागारो। पढमुवसमं स गिण्हदि पंचमवरलद्धि चरिमम्हि। खयउवसमियविसोही देसणयाउग्गकरणलद्धीए। चत्तारिवि सामण्णा करणं सम्मत्त चारित्ते। कम्ममलप-डलसत्ती पडिसमयमणंतगुणविहीणकमा। होदूपुहीर-दिजदातदा खओव समलद्धीहु। आदिमलद्धिभवो जो भावो जीवस्स सादपहुदीणं। सत्थाणं पयडीणं बंधणजोगोविसुद्धलद्धीसो छद्दव्वणवपयत्थोपदेस परसूरिपहुदिलाहो जो। देसिदपदत्थ धारण लाहोवा तदियलद्धीहु। अंतो कोडाकोडी विट्ठाणोठिदिरसाण जं करण। पाउग्गलद्धिवामा भव्वाभव्वेसु सामण्णा।

१—४ ५ ६ ७ ८—६

आंउपडि णिरयदुगे सुहुमतियं सुहुमदोणिपत्तेय। बादर-

१० – १४

जुददोण्णिपदे अपुण्णजुदबितिचसण्णि सण्णीसु। अट्ठअपुण्ण-

१५–२२

जुदेसुवि पुण्णजुदेसुनेसु तुरियपदे। एइंदियआदावं थावरणामं

२३ २४ २५

च मिलिदव्वम्। तिरिगदुगुज्जोवोविय णीचे अपसत्थगमणदुभ-

२६ २७ २८ २९

गतिये। हुंडासंपत्त विजयणओसएवामरवीलीए। खुज्जद्धणाराए

३० ३१ ३२ ३३

इत्थीवेदेय सादिणाराए। णग्गोभवज्जणाराए मणुजोरालदुगवज्जे।

३४

अथिरअसुहजस अरदी सोय असन्दे य होंति चोतीसा। बंधोसरणट्ठाणा भव्वाभव्वेसु सामण्णा। जागदी अरहंताणं णिट्ठिदट्ठाण जागदी। जागदी वीदमोहाणं सामेभवदु सस्सदा भिन्नखंचर म्म रणणे योवंजेमेहिमाबहू जंय दुक्खं सह जिणणिदा मेत्ति भावेहि सुट्ठु वेरग्गं। णरतिरि-यग्गं ओघो भवणतिसोहम्मिजुगलए विदियं। तिदियं अट्ठार सम तेवीसदिभादिदसपदंचरिम। ते चेवचोदस्सपदा अट्ठारसमेण हणिया होंति रयणादि पुढविछक्के सणकुमारादिदसकप्पे। ते तेरसविहियेण य तेवीसहिमेण चावि परिहीणा। आणदक प्पादुवरिम गेवेज्जतोत्ति ओसरणा। ते चेवेकारपदा तदिऊणा विदियठाण संपत्ता। चउवीसदिमेण्णा सत्तमिपुढविम्हि ओसरणा। दुतिआउतित्थयहार च अकणासम्मगणे हीणावा। मिस्सेणुणा वावियसव्वे पाडिहवे सत्तं। दंसणमोहवा बणा

पट्ठवगो कम्मभूमिजो मणुसो। तित्थयरपायमूले केवलिसुद केवलीमूले। णिट्ठवगोतदाणे विमाणमोगावणीसु धम्मेय। किदकरणिज्जो चदुसुविदीसु उप्पज्जदे जम्हा आवलिय अणायारे[1]
२ ३ ४ ५ ६ ७ ८ ९ १०
चक्खिदिय सोद घाण जिब्भाए। मण वयण काय पासे अवाय
११ १२ १३ १४ १५ १६ १७
ईहा सुदु स्सारेन। केवलदंसणणाणो कसाय सुक्केकये पुधतेय
१८ १९ २० २१ २२ २३
पडिवादुवासामेंतय खवेंतए संपराये य। माणद्धा कोहद्धा मायद्धा
२४ २५ २६
तह यचेव लोहद्धा। खुद्दभवगाहणं पुण किट्टीकरणं च वोद्धव्वा।
२७ २८ २९ ३० ३१
संकामण ओवट्टण उवसंतकसाय खीणमोहद्धा। उवसामेंतयअद्धा खवेंत[32] अद्धा य वोद्धव्वा। णिव्वाघादेणेदा होंति जहण्णावो आणुपुव्वीए। एत्तो अणाणुपुव्वी उक्कस्सा होंति भजियव्वा। चक्खु सुदं पुधत्तं माणो वाओ तहेव उवसंते। उवसामेंतयअद्धा दुगुणा सेसाहु सविसेसा। चदुरेक्कदुपण पंच छत्तिगठाणाणि अप्पमत्तंता। तिसु उवसमगे संतेत्तिय तिय तिय दोण्णि गच्छंन्ति। सासणमत्तावज्जं अपमतत्तं समल्लियइ मिच्छो। मिच्छन्तं विदिसगुणे ि स्संपढमं चउत्थं च। अविरदसम्मोदेसे। पमत्तापरिहीणमप्पमतंत्तं। छट्ठामोणि पमत्तो छट्ठगुणं अप्पमत्तोदु होंति खवा इगि समये वोहिबुद्धाय पुरिसवेदाय। उक्कस्सेणट्ठु- तरसयप्पमा सग्गदो य चुदा। पत्तेयबुद्धितित्थयरत्थिणइसम

मणोहिणाण जुदा। दसवीसछक दसवीसट्ठावीसं अट्ठाकमसो। जेट्ठावरबहुमज्जिमओगाहणगादुचारि अट्ठेय । जुगवं हवन्ति खवगा उवसमगा अद्धमेदेसि।

# १४ समाधिमरण भाषा।

पं० सूरजचन्द जी रचित नरेन्द्र छंद

वंदौं श्रीअरहंत परमगुरु, जो सबको सुखदाई। इस जगमें दुख जो मैं भुगते, सो तुम जानो राई। अब मैं अरज करूं प्रभु तुमसे, करसमाधि उर माहीं। अंतसमयमें यह वर मांगूं सो दीजै जगराई।१। भवभवमें तनधार नये मैं, भव भव शुभ सङ्ग पायो। भव भवमें नृपरिद्धि लई मैं, माता पिता सुत थायो भव भवमें तन पुरुषतनों धर, नारी हू तन लीनों। भवभवमें मैं भयो नपुंसक, आतमगुण नहिं चीनो।२। भवभव मैं सुरपद-वीपाई, ताके सुख अति भोगे। भवभव मैं गति नरकतनी धर, दुख पाये विधि योगे॥ भव भवमैं तिर्यंच योनिधर, पायो दुख अति भारी। भवभवमैं साधर्मीजनको, सङ्ग मिल्यो हितकारी।३। भवभवमें जिनपूजन कीनि, दान सुपात्रहिं दीनो। भवभवमें मैं समवसरणमैं, देख्यो जिनगुण भीनों। एती वस्तु मिली भव भव नैं सम्यकगुण नहि पायो जिनगुण भीनो। एती

वस्तु मिली भव भवमें मैं सम्यकगुण नहिं पायो। ना समाधियुत मरण कियो मैं तातैं जग भरमायो।४। काल अनादि भयो जग भ्रमते सदा कुमरणहिं कीनों। एकबारहू सम्यक्युत मैं, निज आतम नहिं चीनो। जो निजपरको ज्ञान होय तो, मरण समय दुख कांई। देह विनासी मैं निजभासो, जोतिस्वरूप सदाई।५। विषयकषायनके वश होकर देह आपनो जान्यो। कर मिथ्यासरधान हियेविच, आतम नाहिं पिछान्यो। यों कलेश पियधार मरणकर, चारों गति भरमायो। सम्यग्दर्शन-ज्ञान-चरन ये, हिरदेमें नाहिं लायो।६। अब या अरज करूं प्रभु सुनिये, मरण समय यह मांगों। रोगजनित पीड़ा मत होवो, अरु कषाय मत जागो। ये मुझ मरणसमय दुखदाता, इन हरसाता कीजै, जो समाधियुतमरण होय मुझ, अरु मिथ्यागद छीजै।७। यह तन सात कुधातमई है,देखतही घिन आवै। चर्मलपेटी ऊपर सोहै, भीतर विष्टा पावै॥ अतिदुगंध अपावनसों यह, मूरख प्रीति बढावै। देह विनासी, जियअविनासी नित्यस्वरूप कहावै।८। यह तन जीर्ण कुटीसम आतम,यातैं प्रीति न कीजै। नूतन महल मिलै जब भाई, तब यामैं क्या छीजै। मृत्युहोनसे हानि कौन है, याको भय मत लावो। समतासे जो देह तजोगे तो शुभतन तुम पावो।९। मृत्यु मित्र उपकारी तेरा, इस अवसरके माहीं। जीरनतनसे देत नयो यह, या सम साहू नाहीं। या सेती इस मृत्युसमयपर, उत्सव अति ही कीजै। क्लेश भाव को त्याग सयाने समताभाव धरीजै।१०। जो तुम पूरव पुण्य

